श्रीहरिरायचरणविरचितः

# श्रीभागवतपुस्तकषोडशोपचारनित्यपूजनविधिः

श्रीकृष्णाय नमः ।

आचम्य प्राणायामं कुर्यात् ।। ॐ भद्रं कर्णेभिरिति शान्तिं पठेत ।। ततः संकल्पः ॐ विष्णुर्विष्णुर्विष्णुः ।। अद्येत्यादि पूर्वोच्चरितएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम सकुटुम्बस्य सपरिवारस्य श्रीगोवर्धनधरणचरणारविन्दप्रसादात् सर्वसमृद्धिप्राप्त्यर्थं प्रारब्धानुसारादनुग्रहपूर्वकश्रीभगवन्नामात्मकस्वरूपश्रीभागवतस्य पाठसांगतासिद्ध्यर्थं श्रीमद्भागवतस्य प्रतिष्ठां पूजनं चाहं करिष्ये ।। तदस्तु मित्रावरुणेति प्रतिष्ठां कुर्यात् ।। ततः पुरुषसूक्तेन आवाहनादिषोडशोपचारैः पूजयेत् ।। ॐ सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् ।। सभूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ।।१।। श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ।। आवाहनम् ।।१।। ॐ पुरुषएवेदंसर्वम् । यद्भूतं यच्च भव्यम् ।। उतामृतत्वस्येशानः । यदन्नेनातिरोहति ।।२।। श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ।। आसनम् ।।२।। एतावानस्य महिमा ।। अतो ज्यायांश्च पूरुषः ।। पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ।।३।। श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ।। पाद्यम् ।।३।। त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुनः ।। ततो विष्वङ्व्यक्रामत् । साशनानशनेअभिं ।।४।। श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ।। अर्घ्यम् ।।४।। तस्माद्विराडजायत । विराजोऽअधि पूरुषः ।। स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ।।५।। श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ।। आचमनीयम् ।।५।। यत्पुरुषेण हविषा । देवा यज्ञमतन्वत ।। वसंतोअस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्धविः

॥६॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ स्नानम् ॥६॥ तं यज्ञं बर्हिषि प्रौक्षन् ॥ पुरुषं जातमग्रतः ॥ तेन देवा अयजंत । साध्या ऋषयश्च ये ॥७॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ वस्त्रम् ॥७॥ तस्माद्यज्ञात्सर्वहुतः । संभृतं पृषदाज्यम् ॥ पशूँ स्ताँ श्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये ॥८॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ यज्ञोपवीतम् ॥८॥ तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे ॥ छंदाँ सि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥९॥ श्रीभगवन्नामात्मक-स्वरूपिणे श्रीभागवताय नमः ॥ चंदनम् ॥९॥ तस्मादश्वा अजायंत । ये के चोभयादतः ॥ गावोहजज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥१०॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ पुष्पम् ॥१०॥ यत्पुरुषंव्यदधुः । कतिधा व्यकल्पयन् ॥ मुखं किमस्यकौ बाहू । काऊरु पादावुच्येते ॥११॥ श्रीभगवन्नामात्मकस्वरुपिणे श्रीभागवताय नमः ॥ धूपम् ॥११॥ ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ॥ ऊरु तदस्य यद्वैश्यः । पद्भ्याँ शूद्रो अजायत ॥१२॥ श्रीभागवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ दीपम् ॥१२॥ चंद्रमा मनसो जातः । चक्षोः सूर्यो अजायत ॥ मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥१३॥ श्रीभगवन्नामात्मकस्वरूपणि श्रीभागवताय नमः ॥ नैवेद्यम् ॥१३॥ नाभ्या आसीदंतरिक्षम् । शीर्ष्णो द्यौः समवर्तत ॥ पद्भ्यां भूमिर्दिशः श्रोत्रात् ॥ तथा लोकाँ अकल्पयन् ॥१४॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ पूंगीफलतांबूलम् ॥१४॥ सप्तास्यासन् परिधयः । त्रिःसप्त समिधः कृताः देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् ॥१५॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभगवताय नमः ॥ दक्षिणाम् ॥१५॥ वेदाहमेतं पुरुषं महांतम् । अदित्यवर्णं तमसस्तु पारे ॥ सर्वाणि रूपाणि विचित्यधीरः । नामानि कृत्वाभिवदन् यदास्ते ॥१६॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ नमस्कारम् ॥१६॥

धातापुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान् प्रदिशश्चतस्रः ॥ तमेवं विद्वानमृत इह भवति । नान्यः पंथा अयनाय विद्यते ॥१७॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभगवताय नमः ॥ प्रदक्षिणाम् ॥१७॥ यज्ञेन यज्ञमयजंत देवाः तानि धर्माणि प्रथमान्यासन् ॥ ते ह नाकं महिमानः सचंते । यत्र पूर्वे साध्याः संति देवाः ॥१८॥ श्रीभगवन्नामात्मकस्वरूपिणे श्रीभागवताय नमः ॥ मंत्रपुष्पम् ॥१८॥ ततः प्रार्थना :-

वन्दे श्रीकृष्णदेवं मुरनरकभिदं वेदवेदांतवेद्यम्
लोके भक्तिप्रसिद्ध्यै यदुकुलजलधौ प्रादुरासीदपारः ॥
यस्यासीद्रूपमेवं त्रिभुवनतरणे भक्तिवच्च स्वतत्रं
शास्त्रं रूपं च लोके प्रकटयति मुदा यः स नो भूतिहेतुः ॥
नमः श्रीकृष्णपादाब्जतलकुंकमपङ्कजे ॥
रुचयेदरुण शश्वन्मामके हृदयाम्बुजे ॥२॥
श्रीभागवतरूपं च पूजयेद्भक्तिपूर्वकः ॥
सर्वान् कामान् प्रयच्छन्ति कुर्वते नात्र संशयः ॥३॥

**इति श्रीहरिदासविरचितः**
**श्रीभागवतपुस्तकषोडशोपचारपूजनविधिः समाप्तः**



**નોંધ** :- બ્રાહ્મણ, ક્ષત્રીય કે વૈશ્ય વર્ણના જે કોઇ પણ હોય તેમના જો યજ્ઞોપવીત સંસ્કાર થઇ યજ્ઞોપવીત ધારણ કરતા હોય તેમણે આ પદ્ધતિથી પૂજન કરવું. પરન્તુ જેમના યજ્ઞોપવીત ન થયા હોય તેણે આ પદ્ધતિમાં જ્યાં જ્યાં પણ વૈદમંત્રના પ્રયોગો છે તે નહિં ઉચ્ચારી તે સ્થળે પૌરાણિક શ્લોકોથી પૂજન કરવું અગર તો બ્રાહ્મણ દ્વારા પૂજન કરાવવું.